॥ रुद्राभिषेकस्तोत्रम् महाभारतान्तर्गतम् ॥

कृष्णार्जुनावूचतुः ।
नमो भवाय शर्वाय रुद्राय वरदाय च ।
पशूनां पतये नित्यमुग्राय च कपर्दिने ॥ ५.८०.५५॥

महादेवाय भीमाय त्र्यम्बकाय च शान्तये ।
ईशानाय मखघ्नाय नमोऽस्त्वन्धकघातिने ॥ ५.८०.५६॥

कुमारगुरवे तुभ्यं नीलग्रीवाय वेधसे ।
पिनाकिने हविष्याय सत्याय विभवे सदा ॥ ५.८०.५७॥

विलोहिताय धूम्राय व्याधायानपराजिते ।
नित्यं नीलशिखण्डाय शूलिने दिव्यचक्षुषे ॥ ५.८०.५८॥

होत्रे पोत्रे त्रिनेत्राय व्याधाय वसुरेतसे ।
अचिन्त्यायाम्बिकाभर्त्रे सर्वदेवस्तुताय च ॥ ५.८०.५९॥

वृषध्वजाय मुण्डाय जटिने ब्रह्मचारिणे ।
तप्यमानाय सलिले ब्रह्मण्यायाजिताय च ॥ ५.८०.६०॥

विश्वात्मने विश्वसृजे विश्वमावृत्य तिष्ठते ।
नमोनमस्ते सेव्याय भूतानां प्रभवे सदा ॥ ५.८०.६१॥

ब्रह्मवक्त्राय सर्वाय शंकराय शिवाय च ।
नमोस्तु वाचस्पतये प्रजानां पतये नमः ॥ ५.८०.६२॥

अभिगम्याय काम्याय स्तुत्यायार्याय सर्वदा ।
नमोऽस्तु देवदेवाय महाभूतधराय च ।
नमो विश्वस्य पतये पत्तीनां पतये नमः ॥ ५.८०.६३॥

नमो विश्वस्य पतये महतां पतये नमः ।
नमः सहस्रशिरसे सहस्रभुजमृत्यवे॥

सहस्रनेत्रपादाय नमोऽसङ्ख्येयकर्मणे । ५.८०.६४॥

नमो हिरण्यवर्णाय हिरण्यकवचाय च ।
भक्तानुकम्पिने नित्यं सिध्यतां नो वरः प्रभो ॥ ५.८०.६५॥

सञ्जय उवाच ।
एवं स्तुत्वा महादेवं वासुदेवः सहार्जुनः ।
प्रसादयामास भवं तदा ह्यस्त्रोपलब्धये ॥ ५.८०.६६॥

॥ इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि
अर्जुनस्वप्ने अशीतितमोऽध्यायः ॥ ८०॥